॥ श्रीः ॥

# अथ रत्नत्रयपरीक्षा

श्रीमद्भरद्वाजकुलजलधिकौस्तुभ-श्रीमदद्वैतविद्याचार्य-
श्रीविश्वजिद्याजि-श्रीरङ्गराजाध्वरि-तनूजेन
चित्रमीमांसाद्यनेकप्रबन्धकर्तृ-
श्रीमदप्पय्य दीक्षितेन
निर्मिता ।

सेयं
चैनपुराख्यग्रामनिवासिना
श्रीबाबू श्रीकण्ठप्रसादनारायणसिंहेन

काश्यां
चन्द्रप्रभा-यन्त्रालये मुद्रापयित्वा
प्रकाशिता ।
वैक्रमीय संवत्
१९६२



श्रीगणेशाय नमः।

# अथ रत्नत्रयपरीक्षा।

सर्वज्ञतादिकं शंभोर्यस्या रूपं विदुर्बुधाः।
तां नमामि शिवां सत्यज्ञानानन्दस्वरूपिणीम् ॥ १ ॥

अथ रत्नत्रयपरीक्षाख्यामष्टश्लोकीं संक्षेपेण व्याकुर्महे-

नित्त्यं निर्दोषगन्धं निरतिशयसुखं ब्रह्म चैतन्यमेकं धर्मो धर्मीति रूपद्वयमयति पृथग्भूय मायावशेन ॥ धर्मस्तत्रानुभूतिः सकलविषयणी सर्वकार्यानुकूला शक्तिश्चेच्छादिरूपो भवति गुणगणश्चाश्रयस्यैक एव ॥ १ ॥

नित्यं कालत्रयाबाध्यं दोषगन्धेनापि रहितं निरतिशयसुखात्मकम् अद्वितीयमेकं ब्रह्म चैतन्यं मायया कल्पितभेदं सत् धर्मिधर्मभावं अयति प्राप्नोति जीवब्रह्मविभागवदनादि-

रथं धर्मधर्मिविभागः तत्र धर्मः स्वमात्रप्रकाशरूपस्य धर्मिणः परब्रह्मणः सकलप्रपञ्चविषयाऽनुभूतिर्भवति तदुक्तं श्रीकूर्मपुराणे शिवेनैव, तथाऽहं संगतो देव्याः केवले निष्कलः परः॥ पश्याम्यशेषमेवेदं यस्तद्वेदः(?) समुच्यत इति॥ सएव धर्मस्तस्य सकलकार्यानुकूला शक्तिः सर्वेपि गुणगणा निर्गुणश्च भवति तदुक्तं श्वेताश्वतरोपनिषदि, पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानवलक्रिया चेति। अस्य शक्तिः स्वाभाविकी स्वभावविभागं प्राप्ता ज्ञानरूपा वलरूपा कृतिरूपा चकारादिच्छा रूपाचेत्यर्थः। वलं नाम प्रयत्नमनपेक्ष्य अङ्गुल्यग्रादिनाऽपि महापर्वतादिधारणानुकूलोगुणधर्मः ज्ञानरूपा शक्तिः सैव धर्मिणः सकलगुणगणाद्यात्मिका चेति अभियुक्ता अप्याहुः, शक्तिः शरीरमधिदैवत नरात्मा ज्ञानं कृया करणमासनजालमिच्छा?। ऐश्वर्यमायत वरणानि च त्वं किं किं न यद्भवासि देवि शशाङ्कमौ ति ॥

अस्यैव धर्मज्ञानस्य महिमानमुपनिषत्प्रसिद्धं प्रपञ्चयति ।

वेदज्ञा धर्ममेतं प्रविततमखिलाधारमाकाशमाहुः किंचानन्दं मनोवागविषयमधिकं धर्मिणो वर्णयन्ति ॥ तत्र स्फूर्तिः सुखं च त्रयमपि

**जगतां संगिरन्ते तदंशं प्राणाकाशा द्युपायं कतिचिदपि तदालम्बना स्ते वदन्ति ॥ २ ॥**

वृहदारण्यकोपनिषदि यदूर्ध्वं याज्ञवल्क्यं यदि वियदर्वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे तद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतंचेत्यादि गार्ग्या पृष्टेन याज्ञवल्क्येन आकाश एतदोतं च प्रोतं चेत्यभिहितं कस्मिन्नु खलु आकाश ओतश्च प्रोतश्चेति पुनस्तया पृष्टेन तेन एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्तीत्यादिना अक्षरशब्दितं सर्वज्ञत्वादिविशिष्टं ब्रह्म प्रतिपाद्य एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेत्युत्तरमभिहितं तत स्तत्राकाशशब्देन न भूताकाशः तस्य परिच्छिन्नस्य प्रति कल्पं भिन्नस्य च सर्वदेशकालवर्तिसकलप्रपञ्चधारणायोगात् अतो धर्मज्ञानरूपा चिदम्बरशक्तिरेव आकाश इत्यवसीयते आसमन्तात्प्रकाशयति सर्वप्रपञ्चं अवभासयतीति च परब्रह्मणः सर्वविषयज्ञानरूपे तस्मिन्नवयवार्थानुगतिसमुद्भावात्॥ यस्यैषा परमा देवी शक्तिराकाशसंज्ञिता। अनन्तैश्वर्ययोगात्मा महेशो दृश्यते स हि इति, श्रीकूर्मसूक्त्या तस्या आकाशशब्दत्वावगमाच्च। एवं छान्दोग्योपनिषद्यपि मन्त्रभागे ऋतं सत्ये प्रतिष्ठितं भूतं भविष्यता सहेति भूतभविष्यद्वर्त-

मानकालिकसकलप्रपञ्चाधारत्वेन प्रकृते सत्वे आकाश एवायं जगदाधार उपानिरज्जतु?मह्यामन्नमथो श्रियं नित्याकाशशब्द प्रयोग मक्षरधर्मिको वृहदारण्यकोक्त आकाश एवायं जगदाधार इत्यवसितं अत्र ऋत्तशब्देनापि तथाविनादृग्विषय तया निश्चितत्वात् पारिशेष्याच्च वर्तमानमुक्तं अयंचाकाशो भूताकाशादन्य एवेत्यनन्तरमेव स्पष्टीकृतं आकाशस्यैव आकाशो यदेतद्भाति मण्डलमिति, तत्र प्रकृतिवादिनैतच्छब्देन प्रकृतमाकाशं परामृश्य प्रसिद्धाकाशस्याकाश इत्युक्त्या मन्मथस्यापि मन्मथान्तरवत् आकाशान्तरं प्रतीयते तत्रैव आकाशोह वै नामरूपयोर्निर्वहिताते ऽथदन्तरातद्ब्रह्मेति निर्विकारतया नामरूपास्पृष्टत्वाद्ब्रह्मणो वैलक्षण्येन मानरूपनिर्वोधतया प्रतिपादित आकाशोपि तद्धर्मभूता चिदम्बरशक्तिरेवं तदा तत्राकाशनामरूपाद्यवगमात् एवंतावद्वाजसनेयिनः आदित आकाशोपि चिद्धर्मज्ञानरूपां चिदम्बरशक्तिं सर्वाधारं सर्वकारणमाकाशमाहुरिति स्थितं, तैत्तिरीयास्तु नामैव वाङ्मनसातीतं परब्रह्मणो निरतिशयानन्दमाहुः । यतो वाचो निवर्तन्ते अप्राप्यमनसा सह । आनन्दं ब्रह्मणो विद्वान्न विभेति कुतश्चनेति । अत्र हि ब्रह्मगते परमानन्दे यदेष आकाश आनन्दो नस्यादित्याकाशशब्दसामानाधिकरण्यादस्य चिदम्बरशक्तिरूपत्वमवगम्यते । नच तत्र यदेष इतिप्रकृतानन्दमयपरैतच्छब्दसामानाधिकरण्यं कश्चिद्दोषः आनन्दमयोपि सैव चिदम्बरशक्तिरित्यङ्गीकारात् आनन्द-

मयशब्दो हि प्रचुरानन्दमाचष्टे न तु प्रचुरानन्दविशिष्टं धर्मिणं तत्प्रकृतवचने मयडिति सूत्रस्य अन्नमयं वर्तते यवागूमयं वर्तते प्रचुरतया वर्तते इत्यादिरर्थः शाब्दिकैर्वर्णितः।अन्नमयो यज्ञ इत्याद्युदाहरणानां तु सूत्रस्य अर्थान्तरमाश्रित्य प्रकृतं प्रस्तुतमन्नमन्नमस्मिन् यज्ञे इत्यादिरेवार्थस्तैरङ्गीकृतो न तु तस्मिन्नर्थे प्राचुर्यानुप्रवेशस्तेषामभिमतः इह चावश्यं प्राचुर्यविवक्षया भाव्यं मयटः प्राचुर्यविवरणार्थतयैवाग्रिममीमांसाप्रवृत्तेः सचानन्दमयोक्तः प्रचुरानन्दः परब्रह्मधर्मिक इत्येतदग्रिमात्सएको ब्रह्मण आनन्दः आनन्दं ब्रह्मणोविद्वानित्यतः सिध्यति।नच सत्यं ज्ञानमनन्तं ब्रह्मेति प्रकृते ब्रह्मणि निरूपणीयतद्धर्मरूपस्य प्रचुरानन्दस्य प्राधान्येन निरूपणमप्रकृतासङ्गतमिति वाच्यं, सत्यज्ञानादिमन्त्रोदितगुहारूपतया अन्नमयादिकोशचतुष्टयनिरूपणं कृतं तदन्तर्गतपरमव्योमरूपत्वेनानन्दमयनिरूपणं ब्रह्म पुच्छं प्रतिष्ठेति तत्स्थब्रह्म निरूपणमित्यादिप्रकारेण सर्वस्याप्यग्रिमसंदर्भस्य सत्यज्ञानादिमन्त्रार्थविवरणतया संगतेः तथा सदेव सौम्येदमग्र आसीदित्यधीयानाश्छन्दोगाः घटः सन् पटः सन् इति प्रतीयमानां प्रपञ्चसत्तां चिच्छक्त्यात्मकब्रह्मसत्तास्वरूपामावेदयन्ति।इदं हि वाक्यं घटशरावादिकमिदं पूर्वाह्णेमृदेवासीदिति लौकिकवाक्यतुल्यच्छायं ततश्च यथा घटशरावादिषु मृत्त्वप्रतीतिः पूर्वाह्णदृष्टमृत्कूटगतमृदेकदेशानुस्यूत्यालम्बना तेन लौकिकवाक्येन सिद्ध्यति एवं घटपटादि


CC-0. Swami Atmanand Giri (Prabhuji) Veda Nidhi Varanasi. Digitized by eGangotri

सत्ता प्रतीतिरपि ब्रह्मसत्ताऽनुस्यूतात्मालम्बना सदेवेत्यादि-वाक्येन सिद्ध्यति एवमाथर्वणास्तस्य भासा सर्वमिदं विभाती-त्याऽऽमनन्तो घटः स्फुरति पटः स्फुरतीति प्रतीयमानं प्रपञ्च-स्फुरणं ब्रह्मभावरूपतदीयशक्त्यंशम्वाऽऽवेदयन्ति। न चात्र स्फुरतीत्यस्य स्फुरणविषयत्वमर्थः सविता स्फुरति भाति प्रकाशत इत्यादिप्रयोगे स्फुरणार्थस्य तस्य घटः स्फुरतीत्यादि प्रयोगे अर्थान्तरकल्पनाऽयोगात्। न च ब्रह्मभावस्य साधारण्यं ममस्फुरति मम न स्फुरतीत्यादिव्यवहारानुपपत्तिः। तत्पुरुष-चाक्षुषज्ञानाभिव्यक्तस्य स्फुरणस्य प्रतीतिपरव्यवहारविषय-त्वोपपत्तेः। तथा एतस्यैवानन्दस्य इमानि भूतानि मात्रामु-पजीवन्तीति पठन्तो वाजसनेयिनो वैषयिकादिसुखवृत्तिषु विषयविशेषसंपर्कादिकरणवशात्तारतम्येनाप्यभिव्यक्तपरब्र-ह्मानन्दरूपचिच्छक्त्याशरावर्जीवैरास्वाद्यतइत्यावेदयन्ति तथा तैत्तिरीया अपि आनन्दमीमांसायां यदेष आकाश आनन्दो नस्यादिति प्रकृतमेवानन्दस्य एकोमानुषआनन्द इत्यादि संदर्भे तारतम्यापन्नमानुषाद्यानन्दत्वेनाधीयाना उक्तमर्थ-मावेदयन्ति तथा छन्दोगादयःप्राणाकाशादिविषयोद्गीथादि विद्याश्चिच्छक्तिविषया निबध्नन्ति तासु विद्यासु सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सर्वाणि हवा भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्य-यन्तीति सकलभूतोत्पत्तिलयाधारत्वेन तदुपादानत्वप्रतीतेः कूटस्थे ब्रह्मणि तदयोगात्। कोह्येवान्यात्कः प्राण्यादित्यादि

श्रुत्यनुसारेण सकलप्राणनहेतौ चिदम्बरशक्तिरूपे ब्रह्मधर्मे प्राणाकाशशब्दयोरुपपत्तेश्च ॥ २ ॥

एवं धर्मस्य महान्तं महिमानं प्रदर्श्य धर्मिणो धर्मेऽस्य च कृत्यबिभागं दर्शयति—

कर्तृत्त्वं तस्य धर्मं कलयति जगतां पञ्चके सृष्टिपूर्बे धर्मः पुंरूपमाप्त्वा सकलजगदुपादानभावंविभर्ति ॥ स्त्रीरूपंप्राप्यदिव्याभवतिचमहिषी स्वाश्रयस्यादिकर्तुः प्रोक्तौ धर्मप्रभेदावपि निगमविदां धर्मिविद्ब्रह्मकोटी ॥३॥

सृष्टिपालनसंहारतिरोधानानुग्रहरूपाणि पञ्चकृत्यानि तिरोधानानुग्रहौ वन्धमोक्षौ, एतेषु बिश्वस्य सृष्ट्यादिषु धर्मी केवलं कर्ता भवति धर्मस्तु पुरुषवनितारूपेण विभागं प्राप्य पुरुषरूपेण उपादानं भवति वनितारूपेण धर्मिणो दिव्यमहिषी भवतीत्यतोपुरुषवनिते नास्मदादिवज्जीवकोटी किंतु ब्रह्मकोटीति वेदविदां सिद्धान्त इत्यर्थः नतु ब्रह्मधर्मस्य ज्ञानानन्देच्छादिगुणस्य वह्निगतदहनादिशक्तिवत्

ब्रह्मगतसृष्ट्यादि शक्तिरूपस्य च कथं न स्वतन्त्रचेतनत्वं येन तस्य पुरुषवनिताविभागः स्यात् उच्यते यथैकस्यैव तस्य ज्ञानानन्दाद्यनेकगुणरूपत्वं एवं धर्मिणं प्रति तथा भूतस्यापि स्वतस्तावद्गुणविशिष्टत्वं स्वतन्त्रचेतनत्वमप्युपपद्यते अतएव 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति' श्वेताश्वतरमन्त्रे देवस्य परब्रह्मणः शक्तावात्मत्वविशेषणं, अस्योत्तर आत्मानन्दमय इत्यानन्दवल्ल्यामात्मत्वनिर्देशश्च बृहदारण्यके गार्गिब्राह्मणे पृथिव्यादि ब्रह्मलोकान्तेषु पूर्वं पूर्वं प्रत्युत्तरोत्तरस्याधारत्वोक्त्यनन्तरं कस्मिन्नु खलु ब्रह्माणि लोका ओताश्च प्रोताश्चेति पुनर्गार्ग्या पृष्टेन याज्ञवल्क्येन गार्गिमातिप्राक्षमितिमूर्द्धाव्यपप्तदातिप्रश्नां वै देवतामति पृच्छसीति तत्रात्मत्वावान्तरविशेषरूपदेवतात्वनिर्देशश्च तत्र हि ब्रह्मणि लोकानामोतत्वं परमाकाशवर्णनीयं सा परा देवता गुरूपसदनादिनियममतिक्रम्य प्रष्टुमनर्हतामतिक्रम्य तां माप्राक्षीरिति खलु तत्र देवतापदे वक्ष्यमाणपरमाकाशपदं प्रयुक्तं अतो धर्मस्य ततः स्वतन्त्रचेतनत्वमप्युपपद्यत एव ॥ ३ ॥

नन्वस्तु तयोः पुरुषवनितयोर्ब्रह्मकोटित्वं कुतोऽवसीयत इत्याकाङ्क्षायामाह ।

# योसौ धर्मी स शंभुः स शिव इति परब्रह्म चेति प्रसिद्धो या चोक्ता

धर्मिणोऽस्याविययदिति महिषीसाऽम्बिकोमेतिवित्तम् ॥ यश्चोपादानभूतः पर इह पुरुषः सैव नारायणोक्त्या ख्यातः श्रीकूर्मवाक्यैरधिगमितमिदं नारदस्यापि वाक्यैः।४।

अत्र शिवोधर्मी तद्धर्माणावुमानारायणौ तावपि ब्रह्मकोटी इत्यत्र गमकानि श्रीकूर्मपुराणवचनान्युदाहरिष्यामः तत्र मन्दरशिखरिण्युमासंरक्षणार्थं विष्णुं नियुज्य देवदारुवनं गत्वा तत्र तपस्यतोऽनुगृह्य मन्दरं प्रति निवृत्तः शिवस्तत्र सिंहासने गौर्या नारायणेन च सहोपविष्टे देवर्षिगन्धर्वादिभिः सेव्यमानां स्मिरास्तेति प्रस्तुत्य । दृष्ट्वा सिंहासनासीनं देव्या नारायणेन च । प्रणम्य देवमीशानं पृष्टवन्त्यो वराङ्गनाः। कस्त्वं विभ्राजसे कान्त्या कथं वाला रविप्रभा कोवाऽयं भाति पुरुषः पङ्कजायतलोचन,इति कासां चिद्देवकन्यानां प्रश्नमुपन्यस्य तत्र शिवस्योत्तरवचनानि दर्शितानि । अथ नारायणो गौरी जगन्माता सनातनी, विभज्याहं स्थितो देवः स्वात्मानं परमेश्वरः। न स मे विदुः परं तत्वं देवाद्या न महर्षयः। एकोहं वेदविश्वात्मा भवानी विष्णुरेव च। अहं हि निष्क्रियो धाता केवलो निष्परिग्रहः॥ मममेव

केशवं देवमाहुर्देवीमथाम्बिकामिति । एवं शिवेन गौरीनारायणयोः स्वाभेदमुक्त्वा तयोः स्वधर्मिरूपभेदात्मत्वमनन्तरमेवाविष्कृतं । कूटस्थोह्यक्षरोऽव्यापी योगी नारायणाह्वयः। तारकः पुरुषोत्मात्मा केवलं परमं पदम्। सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना। शान्ता सत्या सदानन्दा परं पदमिति श्रुतिरिति अत्र पुराणे परमपदशब्देन ब्रह्मधर्मरूपा परा शक्तिर्व्यत्रह्रियते अतस्तयोरुभयोरपि परमपदत्वोक्त्या रूपभेदत्वमाविष्कृतं तथा पुत्रार्थे कैलासे कृततपश्चरणाय कृष्णाय शिवेनाभिमते वरे दत्तगौरी वचनम्। वत्स जाने तथानन्तां निश्चलां सर्वदाच्युत। अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव। त्वं हि नारायणः साक्षात्सर्वात्मा पुरुषोत्तमः। प्रार्थितोदेव तैः पूर्वं सञ्जातो देवकीसुतः। पश्य त्वमात्मनात्मानं मम त्वं परमंपदम्॥ नावयोर्विद्यते भेदं ऐक्यं पश्यन्ति सूरय इति ॥ तथा ॥ कैषा भगवतीदेवी शङ्करार्धशरीरिणी। शिवा सती हैमवती यथावद्ब्रूहि पृच्छताम् । तेषां तद्वचनं श्रुत्वा ऋषीणां पुरुषोतमः। प्रत्युवाच महायोगी ध्यात्वा स्वं परमं पदमिति । विष्णोः परमपदत्वोक्त्यनन्तरं, यासा माहेश्वरीशक्तिर्ज्ञानरूपाऽतिलालसा। व्योमसंज्ञा पराकाष्ठा सेयं हैमवती तथ त्यादिना हैमवती स्वरूपतत्प्रभाववर्णनपरे श्रीकूर्मवचनसन्दर्भे कं सर्वगतं सूक्ष्मं कूटस्थमचलंध्रुवम्॥ योगिनस्तत्प्रपश्यन्ति महादेव्याः परंपदमिति गौर्याः परमपदत्वेन चेह ब्रह्मधर्मरूपा शक्तिरुक्ता तथा मङ्कणकं प्रति शिवेन विश्वरूपप्रदर्शने कृते, किमेतद्भगवद्रूपं

सुधीरं विश्वतोमुखम्। का च सा भगवत्पार्श्वे राजमानाऽ[illegible]
स्थितेति। मङ्कणपृष्टेन शिवेन स्वस्वरूपप्रभावकथनानन्तरं,
नमसा परमा माया प्रकृतिस्त्रिगुणात्मिका। प्रोच्यते मुनिभिः
शक्तिर्जगद्योनिःसनातनी। सएव मायाया विश्वं व्यामोहय-
ति विश्ववित्। नारायणः परो व्यक्तो मायारूपमिति श्रुति-
रिति मामकं देशं दृष्ट्वयं ममशक्तिः सैव नारायणरूपेणापि
जगन्मोहयतीत्युक्त्वा, जगदेतदनाद्यन्तं ब्रह्मण्येव व्यवस्थि-
तम्। तदात्मकं तदव्यक्तं तदक्षरमिति श्रुतिरिति। सर्वस्य प्रप
ञ्चस्याव्यक्ताक्षरादिशब्दितब्रह्माश्रितत्वमभिधाय किंतद्ब्रह्मे
त्याकाङ्क्षायां आत्मानन्दंपरंतत्त्वं चिन्मात्रंपरमंपदम्। आकाशं
निष्कलंब्रह्मतस्मादन्यन्नविद्यतइति। यत्परमपदाकाशशब्दाभ्यां
प्रसिद्धं तदिह ब्रह्मोक्तं तस्माच्चेतनाचेतनात्मकप्रपञ्चकारणाद-
न्यन्नास्तीत्युपसंहृतं तत्र का च सा भगवत्पार्श्वे इति प्रश्नस्यैतान
न्प्रतिवचनं सैव नारायणरूपेणावतिष्ठते सैव परमाकाशपर-
मपदरूपा परब्रह्मणः पराशक्तिरित्येवं तन्महिमप्रख्यापनमेव।
अतोपि गौरीनारायणयोर्ब्रह्मधर्मभूतपरमाकाशपरमपदाख्य-
चिच्छक्तिरूपभेदात्मकत्वमभिमतमिति ज्ञायते। ननु कूर्म-
पुराणे प्रथमाध्याय एव, आस्ते द्विजातिप्रवर इन्द्रद्युम्न इति
श्रुतः। पूर्वजन्मनि राजासावदृश्यं शङ्करादिभिः। दृष्ट्वा मां
कूर्मसंस्थानं श्रुत्वा पौराणिकीं स्वयम्। संहितां मन्मुखाद्दिव्यां
पुरस्कृत्य मुनीश्वरान्॥ ब्रह्माणं च हरं देवं देवानन्यांश्च
शक्तिभिः॥ मच्छक्तौ संस्थितान् बुध्वा मामेव शरणं गत-

ईशिवे । अस्यास्त्वंशानधिष्ठाय शक्तिमन्तो ऽभवन् द्विजाः ॥ ब्रह्मेशानादयो देवाः सर्वशक्तिरियं मम ॥ सैव सर्वजगत्सूक्तिः प्रकृतिस्त्रिगुणात्मिका ॥ प्रागेव मत्तः संजाता श्रीकल्पे या प्रवासिनीति, श्रीकूर्मरूपिणा भगवतैव ब्रह्मेशानादिभ्यः स्वयमेव पर इति प्रतिपादितं कथमुपक्रान्तपरापरभवव्यत्ययेनोपरि प्रतिपादितमिति चेत् उच्यते तत्र ब्रह्मणः संहाररुद्राच्च परत्वं प्रथमाध्याये प्रतिपादितं तयोरेव तत्प्रसादक्रोधप्रभवत्वेन द्वितीयाध्याये प्रतिपादनात् तत्तु परमशिवादपि तस्य मूर्त्तित्रयापेक्षयाऽपि परत्वस्य शास्त्रान्ते प्रतिपादनं कृतम् ॥ स तां शक्तिं समास्थाय स्वयं देवो महेश्वरः। करोति देवान् विविधान् ग्रसते चैव लीलया ॥ इज्यते सर्वयज्ञेषु ब्राह्मणैर्वेदपारगैः ॥ सर्वकामप्रदो रुद्र इत्येषा वैदिकी श्रुतिः। सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः॥ प्रधानाः संस्मृता देवाः शक्तयः परमात्मनः ॥ आभ्यः परस्ताद्भगवान् परमात्मा सनातनः। गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः। एतमेके वदन्त्यग्निं नारायणमथापरे।इन्द्रमेके परे प्राणं ब्रह्माणमपरे जगुः॥ ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवास्तथर्षयः॥ एकस्य रुद्रस्य भेदास्ते परिकीर्त्तिताः ॥ यं यं भेदं समाश्रित्य यजन्ते परमेश्वरम् ॥ तत्तद्रूपं समास्थाय प्रददाति फलं शिव इति ॥ किंच कूर्मपुराणे य इन्द्रद्युम्नं प्रतिब्रह्मेशानादिदूरस्वभावो वर्णितः स एव मुमुक्षुस्तेन शिवमहिमावर्णनपूर्वकं शिवज्ञानप्रदानेन शिवपदप्राप्तिरूपं मोक्षं प्राप्त इति प्रथमाध्याये वर्णितं

अतोपि ज्ञायते तुरीयः स शिव इति तदिदमग्रे स्फुटीकरिष्यामः ब्रह्मविष्णोर्ब्रह्मसंहाररुद्रयोश्च नियतः परापरभावो ऽभिमतः, किंतु वरगोष्ठ्यात्मा येन लीलया कालविशेषेषु व्यवस्थितः अत एव द्वितीयाध्याये, तिस्रस्तु मूर्त्तयः प्रोक्ताः ब्रह्मविष्णुशिवात्मिकाः॥ रजः सत्वतमोयोगात्परस्य परमात्मनः॥ अन्योन्यमनुरक्तास्ते अन्योन्यमुपजीवकाः। अन्योन्यप्रणताश्चैव लीलया परमेश्वरा इति । तस्माद्युक्तमुपरितनं सर्वं गौरीनारायणयोः शिवस्य च धर्मधर्मिभावस्य तत्कृतगुणप्रधानभावस्य च व्याख्यानमिति सर्वमनवद्यम् ॥ एवं गौरीनारायणयोः शिवस्य च सत्यपि तत्तदुपासनाफलविशेषफलप्रदानाद्यनुगुणे काल्पनिके गुणप्रधानभावे वस्तुतस्तयोर्ब्रह्मकोटित्वमपि तत्रैवाविष्कृतम् । अस्यां सर्वमिदं जातमत्रैव लयमेष्यति। एषैव सर्वभूतानां गतीनामुत्तमा गतिः॥ एष धाता विधाता च कारणं कार्यमेव च । कर्त्ता कारयिता विष्णुर्भुक्तिमुक्तिफलप्रदः ॥ भोक्ता पुमानप्रमेयः संहर्त्ता कालरूपधृक्॥ स्रष्टा पाता वासुदेवो विश्वात्मा विश्वतो मुख, इत्यादि वचनम् ॥ संदर्भैः एतानि कूर्मवचनानि शिवगौरीनारायणाभेदे प्रमाणीकृतानि॥ अथ सनत्कुमारवचनानि तत्र प्रमाणीक्रियन्ते, स्कांदे सनत्कुमारसंहितायां काञ्चीमाहिमवर्णनं प्रस्तुत्य, यत्र देवी भगवती शङ्कराराधनेरता। अद्यापि लोकरक्षार्थं दृश्यते नाकृतात्मभिः॥ भिक्षमायां महादेवं ज्ञात्वा यत्र स्वयं शिवा॥ शिवानन्दमनाद्यन्तं स्वात्मानं प्रददौ शिवेति, तस्याः कामा-

शिवं सदासन्निधानमुक्त्वा तत्पुरीशः पुराचासीद्राजासिद्ध-नगोपयः॥ काशिराजो यथा काञ्च्यां काश्यां काञ्चीश्वरस्तथा॥ राजा प्रभाकरो नाम प्रभाकरसमप्रभः॥ वैष्णवः शिवधर्मज्ञः केशवार्चनतत्परः ॥ काशिराजस्य तनयोदिवोदासो भुवि सुव्रत॥ पद्मिनी नाम तस्यासीद्भार्या सत्या पतिव्रता ॥ देव्या-राधनतत्त्वज्ञतत्परा तत्परायणा ॥ तैस्तैर्भावैः प्रियतमै रर्चयती महेश्वरीम्। पतिव्रता तु नारीणां तत्प्रिया तत्पतीनपि॥ तेभ्यो मनोरथान् दत्वा प्रीणयामास तैश्च सा ॥ प्रीयतां पार्वती देवी विद्यादेहातिनिर्मला ॥ याजगद्रक्षणरता दीनानाथा-दिपोषिका इत्यादिना काञ्चीपुर्यामपि विष्णुभक्तं राजान-मम्बिकाभक्तां तस्य महिषीं तयोरिष्टदेवताराधनं वर्णयित्वा, एवं देव्यात्मना स्वेन परमेण जनार्दनः॥दम्पत्योरेककार्यत्वा-देक एव द्विधाऽर्चितः, इति दम्पतिभ्यामाराधितयोर्गौरीना-रायणयोरैक्यं स्पष्टमुक्तम् ॥ एष नारायणो देवः पुराणः पुरुषोत्तमः॥ प्रभाकरस्य पद्मिन्या भक्त्यातुष्टोजनार्दन, इत्य-नन्तरमुभयोरपि भक्त्या नारायणस्यैव तुष्टत्वोक्त्या, प्रसन्नः सर्वभावेन सद्भक्त्या वाङ्मनोऽतिगम्॥ पूजान्ते दर्शयामास स्वात्मानं वेदमूर्धगम्॥श्रीभूमिसहितं साक्षागरुडस्कन्धमास्थि-तमिति नारायणात्मनैव वरदानाय सन्निधानोक्त्या तत-स्तं दम्पती दृष्ट्वा दिव्येनाक्षेन चक्षुषा॥ वासुदेवप्रसादेन क्षीण-निः शेषपातकौ ॥प्रीतौ च परया भीत्त्या स्तोतुं तमपि नक्ष-मावित्यादिना तयोर्नारायणप्रसादेनैव पापक्षयादिसकल-

लाभोक्त्या च गौरीनारायणयोरैक्यं दृढीकृतं गौर्याश्च सिद्धा तिशयानन्दशिवधर्मत्वं, शिवानन्दमनाद्यन्तं स्वात्मानं प्रददौ शिवेति प्राक् प्रतिपादितेन नारायणस्याप्यर्थात्तत्त्वं सिद्धं तस्य च धर्मिरूपशिवाभेद,स्त्वद्विधानां च सर्वेषां सद्भक्तानां नृपोत्तम॥मुक्तिः करतलस्थैव पुनर्जन्मविरोधिनी॥ मत्प्रसादान्न संदेहः किमुतात्रे स्थितं मयीति तद्वचनाकर्णनात्तद्दर्शन-मात्रेण स्वस्य मुक्तिं भाविनीं निश्चित्य कृतकृत्यतां मन्वा-नस्य तत्प्रतिज्ञातमुक्तिपदालाभोपयोगिकाशीवासपाशुप-तव्रतचिकीर्षोत्पादनार्थं अशेषोपनिषद्वेद्यं न यस्मात्परमं पदम्॥ तस्मिन् पाशान्समुच्छिद्य शोषयित्वा विदात्वतान्॥ प्लाव-नादमृतीकाराच्छिवत्वस्य प्रभावनात्॥ त्यक्त्वा पशुत्वं मां प्राप्य न कश्चिज्जायते पुनरिति, प्रभाकरं प्रति तद्वचनेन पाशुपतव्रतानुष्ठानलब्धशिवप्राप्तेर्मां प्राप्येति स्वप्राप्ति-रूपोक्त्या स्फुटीकृतः तदनन्तरं च, विद्वद्भिरखिलैर्वेद्यो यस्त्व-मेव जनार्दन॥ सम्प्राप्ताद्य मया देव किं ते तत्परमं पदमि-मिति, पृष्टवन्तं प्रभाकरं प्रति । अपरं च पदं राजन् परमं च पदं मम॥ भोगैश्वर्यप्रसक्तानामपरं प्राप्यते पदम्॥ विरक्तानां मुमुक्षूणामात्यन्तिकलयार्थिनाम्॥ भस्मज्योतिर्दिदृक्षूणां शिवं तं सोममीश्वरम्॥ अपरावर्तिनां साक्षात्परमं पदमिष्यते॥ वर्णाश्रमाचारयुतः कृत्वा पाशुपतं व्रतं॥ योगं पाशुपतं युञ्जन् परमभ्येति तत्पदमित्युक्त्वा, ततः। किं तद्व्रतं कथं कार्यं कः पाशच्छेदनं च किम्॥ शोषणं दहनं प्लावममृतीकरणंतथा॥

शैवः पाशुपतो योगः कथं वा शिवमर्चना ॥ का मुक्तिः
किंच विज्ञानं प्रार्थ्यं यस्मान्न विद्यते॥ कः शिवः कः शिवान-
न्दः प्रसिद्धः परमेश्वर, इति पृष्टवन्तं तं प्रति त्वत्पृष्टार्थपरिज्ञा-
नार्थं ब्रह्मादयः काश्यां मामुदिश्य तपस्यति त्वमपि तत्र गत्वा
तपः कुरु द शवत्सरान्ते संनिधाय तेभ्यस्तुभ्यं चोपदेक्ष्यामीति
काश्यां तपांसि तं नियुज्य तथैव व तस्मिन् काले सन्नि-
धाय ब्रह्मादिभ्यः प्रभाकरसहितेभ्यः पाशुपतव्रतादिस्वरू-
पोपदेशानन्तरं प्रभाकरं प्रति द्वादशवार्षिकं पाशुपतं व्रतम-
नुष्ठाय अश्वमेधं कृत्वा तत्समाप्त्यनन्तरं विश्वेश्वरं दृष्ट्वा दक्षि-
णामूर्त्तिसन्निधिमागच्छेत्युपदिश्य,तत्र द्रक्ष्यसि मां देवं विश्वा-
त्मानं पिनाकिनम् ॥ सुमहानन्दसहितं वृषराजं समास्थित-
मित्युक्त्या च स्फुटीकृतनारायणस्य शिवाभेदेनैव तदभि-
न्नाया गौर्याः शिवाभेदोप्यर्थसिद्धः। नारदखण्डे प्रथमे खण्डे
उमामहेश्वरा त्पतौ देवीं प्रति हरिश्चन्द्रवाक्यम्।ततः स नृपति-
स्ताभ्यामगमद्विधिपूर्वकम्॥ कृत्वा नतिंततोवाक्यं विनयादि-
दमब्रवीत्। पुरा देवि मयानन्दपूर्व्याकुलचेतसा ॥ न नता त्वं
न मेकोयं तस्मात्त्वं कर्तुमर्हसि ॥ देहार्धधारिणी देवी सदा त्वं
शूलधारिणः तस्मात्तस्मिन्नते कस्मान्ननता त्वं वदस्व मे ॥
यस्तं नमति देवेशं तेन त्वं सर्वदा नता ॥ नतायां स्यादिति
मे मतिः। तथापि च पृथक् येन मया त्वं शम्भुना सह॥एकासने
समारूढा तत्समं देवि पूजिता।तस्मात्कुरु प्रसादाद्य यः पुरोक्त
पुराणेनेति ॥ ननु हरिवंशे पारिजातसंहितायां पारिजातप्रा-

र्थनार्थं भगवता निसृष्टार्थदूततयेन्द्रं प्रति प्रेषितेन नारदेन नानाविधैरुपायैः प्रार्थित इन्द्रो यदा पारिजातं न दातुमैच्छत् तदा तं प्रति रहसि भगवन्महिमप्रख्यापनार्थानि नारदवचनानि पठ्यन्ते। य एको विश्वमध्यास्ते प्रधानं जगतो हरः। प्रकृत्या यं परं सेर्त्रे क्षेत्रज्ञं वै विदुर्बुधाः ॥ तस्याव्यक्तस्य यो व्यक्तो भागः सर्वभवोद्भवः॥ तस्यात्मा प्रथमो देवी विदुमः सर्वस्य धीमतः॥ प्रकृत्या प्रथमो भाग उमा देवी यशस्विनी। व्यक्तः सर्वमयो विष्णुः स्त्रीसंज्ञो लोकपावनः॥ रुक्मिण्याद्याः स्त्रियस्तस्य व्यक्तत्वे प्रथमो गुणः ॥ अव्यक्ता प्रकृति र्देवी गुणी देवो महेश्वरः ॥ गुणिनश्चाव्यपायश्च सादरः प्रथमो गुणः॥ नारायणो महातेजाः सर्वकृल्लोकभावनः॥ भोक्ता महेश्वरो देवः कर्त्ता विष्णुरधोक्षजः॥ ब्रह्मा देवगणाश्चान्ये पश्चात्सृष्टा महात्मना ॥ महादेवेन देवेश प्रजापतिगणास्तथा॥ एवं पुराणपुरुषो विष्णु र्देवेषु कथ्यते। अचिन्त्यश्चाप्रमेयश्च गुणेभ्यश्च परस्तथेति ॥ अत्र शिवस्यांशो नारायणः प्रकृत्यंशो गौरीति गौरीशिवयोर्गौरीनारायणयोश्च भेदं प्रतिपाद्य नारायणस्य परमशिवभेदः प्रतिपाद्यत इति प्रतीयते॥ उच्यते॥ एतान्यपि वचनानि श्रीकूर्मराजसनत्कुमारवचनानुरोधेन नेतव्यानि,तन्नयनप्रकार इत्थं तस्याव्यक्तस्येत्यत्राव्यक्तशब्देन प्रकृतिरूपा चिच्छक्तिरुच्यते अव्यक्ता प्रकृतिर्देवीत्यग्रे विवरणात् इह स्त्रीलिङ्गनिर्देशाभावस्तस्येति हरपरामर्शिपदे सामानाधिकरण्यात् तत्सामानाधिकरण्यनिर्देशस्तु चिच्छक्ते

शवं दस्फुटीकरणार्थः। तथा च तस्य हरस्याऽव्यक्ताचिच्छाक्त्यावस्थापन्नस्य योऽव्यक्तो भागः स कीदृशः सर्वभवोद्भवः सर्वकार्योत्पत्तिहेतुः अनेन सर्गादौ चिच्छक्तेः सकलकार्यवर्गकारणतया व्यक्तो भागः कश्चिदाविर्भवतीति लभ्यते तस्य कारणात्मना व्यक्तस्य भागस्य संबन्धी प्रथमश्चान्त्य कार्यवर्गस्यावान्तरकारणभूतान् हिरण्यगर्भादीनपेक्ष्याद्यबोधकवर्गत्वं स्वरूपं चोपादानभूतो भगवान् विष्णुरिति सर्वस्य धीमतो विवेकिनो मतमिदं व्यक्ते भागे कस्मिंश्चिद्विभक्ते सत्यव्यक्तभागो यस्तन्मूलतया स्थितः सा भगवती गौरीति तस्मात्सर्वमनवद्यम्। एवं शिवस्य धर्मित्वं गौरीनारायणयोस्तद्धर्माव्यक्तभागरूपत्वं तत एव त्रयाणां ब्रह्मकोटित्वं समार्थितम् ॥ ४ ॥

अथ नारायणस्य महिमानं शिवप्राप्तिमिच्छतां
तत्तत्समाश्रयणावश्यभावं च दर्शयति–

तस्यैवाद्यस्य पुंसः परिणतिरखि-
लोऽप्यम्बरादिर्विकार, स्तस्यैवांशो
विरञ्च्यादिक (मपि) निखिलोप्येष
संसारिवर्गः॥ प्राप्यं कृत्वैव तस्य प्रप-
न्न? ममृतस्याद्यमानन्दमूर्तिः, स्थानं

भर्गस्य जुष्टं तदमृततनयै र्दैवतैर्मूर्ध्नि पुराणैः ॥ ५ ॥

हरेरेकस्यैव परिणामो वियदादिसर्वो विकारः, "यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयते ऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थित" इति महोपनिषदि । तस्य बाह्याभ्यन्तरसकलनामरूपव्यापकत्वश्रवणात् । नच नीरूपस्य परिणामानुपपत्तिः यदातम इति मन्त्रे 'प्रज्ञा च तस्मात्प्रसृता पुराणीति' धर्मज्ञानस्य प्रसरणोक्त्या परिणामित्वविभावनात्। ब्रह्ममीमांसायां कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवेति सूत्रेण कृत्स्नैकदेशविकल्पेन ब्रह्मणो जगदाकारपरिणामानुपपत्तिमाशङ्क्य श्रुतेस्तु शब्दमूलत्वादिति सूत्रेण श्रुत्युपपन्नेर्थे नैवंभूतकुतर्कावकाश इति समाहितत्वाच्च ॥ हरिवंशे कैलासयात्रायां "यत्तत्कारणमाहुस्तत्तमः प्रकृतिसंज्ञितम्। मायाभूतं जगद्योनिं प्रधानं कारणात्मकम्॥ सत्वं रजस्तमोविष्णोर्जगदण्डं जनार्दनात्॥ तस्य कारणमाहुस्त्वां सांख्यास्तत्वविदोहरे ॥ ततो महान् समुत्पन्नः प्रकृतेर्जन्मकारणम् ॥ तद्रूपेण भवान् बिष्णो परिणाम्यधितिष्ठतीति," कृष्णं प्रति शिववचनेन तस्य परिणामिकारणत्वस्फुटीकरणाच्च । प्रकृते जन्मकारणं भवान् प्रकृतिरूपेण (ना) महदादिकार्यजातमधितिष्ठति व्याप्नोतीत्यर्थः ततः सर्वे संसारिणो नारायणस्यैवांशाः 'ममैवांशो जीवे लोके' जीवेत्यादिस्वारस्यात्तदाश्रयणं कृत्वैव शिवस्य दिव्यं स्थानं

शिवं परम्। त्वामनाश्रित्य विश्वात्मन्न योगी मामुपैष्यति। पालये-त्तज्जगत्कृत्स्नं सदेवासुरमानुषमिति, कौर्मे नारायणं प्रति शिववचनात् देव शिवस्य दिव्यं स्थानमानन्दमूर्त्तीत्यादिना विशेषितं तद्धि प्रकृतिमायामहामायाविकारमलिनमिश्रशुद्ध-प्रपञ्चातीतं परमशिवानादिचिच्छक्तिरूपपरमानन्दमयं शिव-पुराणादिषु प्रसिद्धम्। अमृतस्य एतानि ह वा अमृतस्य ना-मधेयानीत्यमृतशब्दितस्य शिवस्य तनयैर्देवानामपिदेवैः पुराणैर्जुष्टं तदत्र तनयैरित्यनेन युजे वां ब्रह्म पूर्व्यं नमोभि-र्विश्लोकयन्ति पथ्येव सूरेः शृण्वन्ति विश्वे अमृतस्य पुत्रा अमेधानाप्नोति दिव्यानि तस्थुरिति श्वेताश्वतरोपनिष-न्मन्त्रप्रतिपन्नस्तेषां महिमा स्मारितः। अस्य मंत्रस्यायमर्थः॥ वां युवयोः शिवशक्त्योर्मध्ये पूर्व्यं पूर्वं स्वार्थे यत्प्रत्ययः विशे-ष्यतया प्रधानभूतं ब्रह्म शिवरूपं नमोभिर्युजे युनज्मि छान्द-सो विकरणप्रत्ययः शिवस्य सर्वनमस्कारपर्यवसानभूमि-त्वान्नमस्काराङ्कितैः श्लोकैर्भजामीत्यर्थः नमस्कारश्लोका वि-शेष्यन्ते सूरेः विदुषः शिवस्य रूपाभिज्ञस्य शिवज्ञानान्मुक्तेः प्राप्तस्य मम श्लोकाः वाचिकादिनमस्कारसंदर्भरूपाः अहं श्लोककृदिति मुक्तकृतत्वेन प्रसिद्धाः पथ्येव पथि हिताः त्व-रिता निर्विकारादिमार्गगमनाः सदश्वा इव वियन्ति निरर्ग-लप्रवाहतया निर्गच्छन्ति पथ्यशब्दात्सुपांसुलुगित्यादिसूत्रेण जस आकारादेशः, विश्वेप्यमृतस्य शिवस्य पुत्राः नन्दिके-श्वरादयः पारिषदाः शृण्वन्ति अमृतस्य पुत्रा विशेष्यन्ते ये

दिव्यानि दिवि भवानि चिदाकाशरूपे नित्यकैलासे संस्थितानि धामानि भवनानि आतस्थुरिति देवानामपि देवैरित्यनेन देववृत्ताद्यसाम्यप्रतिपन्नस्तेषां महिमा स्मारितः, तत्र हि पृथिवीषदो दिविषदो ऽन्तरिक्षसदो दिविषदो ऽप्सुषदो दिविषद आकाशसदश्चेत्येवं सकलजगद्व्यापिनस्ते प्रतिपर्यायं द्विवारमावर्त्तितैर्देवदेवैः सादरं? सकलदेवनियन्तृत्वेन प्रतिपादितः तथा शिवपुराणेऽप्युपपादितम् । "तेहि साक्षाद्दिविषदो ह्यन्तरिक्षसदस्तथा ॥ पृथिवीषद इत्येते देवदेवव्रतैस्तुता, इति पुराणै रित्यनेन दिव्या गणा वहुरूपाः पुराणा इत्यादि पुरुषसूक्तमंत्रप्रतिपन्नस्तेषां स्मारितः, तेषामेव महिमजातं सौषुप्तिके पर्वणि भगवता व्यासेन संगृहीतम्। कामकारकराः सिद्धास्त्रैलोक्यस्येश्वरेश्वराः ॥ नित्यानन्दाः प्रमुदिता वागीशा गतमत्सराः ॥ प्राप्याष्टगुणमैश्वर्यं तेन यान्ति च विस्मयम् ॥ येषां विस्मायते नित्यं कर्मभिर्भगवान् भवः॥ मनोवाक्कायनिरतान् याति पुत्रानिवौरसान्॥ श्रुतेन ब्रह्मचर्येण तपसा च दमेन च। ये समाराध्य शूलाङ्कं तत्सायुज्यमुपागता, इति अत्र त्रैलोक्येश्वरेश्वरा इत्यनेन देवदेवत्वं संगृहीतम्। वागीशा इत्यनेन श्लोककर्तृत्वं श्लोकश्रोतृत्वं च संगृहीतम् याति पुत्रानिवौरसानित्यनेनाभूतपुत्रत्वं संगृहीतम्, दिव्यागणा वहुरूपाः पुराणा इति मन्त्रोक्तं वहुरूपत्वं तु प्रागेव तेषां वहुविधघोरशान्तरूपोक्त्या संगृहीतम् ॥ ५ ॥

अथ गौरीमहिमप्रदर्शनपूर्वकं तस्याः शिवेन सहोपासनानियमं दर्शयति--

ख्याताः कोट्योनवाष्टादशपरिमिताः स्थाणुवैकुण्ठवेधाः शक्तीनां यत्कलांशास्त्रिभुवनविषयाः शङ्करस्यैव भोग्याः॥ या विख्याता कृपाब्धिः श्रुतिशिरसि परब्रह्मविद्याप्रदात्री साहित्यं सा भवानी भजति नियमतः शङ्करोपासनासु ॥ ६ ॥

अत्र सर्वशक्तीनामुमांशत्वेन शङ्करभोग्यत्वे वाराहपुराण वचनानि,"नवकोटयस्तुचामुण्डाभेदाभिन्नाव्यवस्थिताः । या रौद्रा तामसी शक्तिः सा चामुण्डा प्रकीर्त्तिता॥ अष्टादश तथा कोट्योवैष्णव्या भेद उच्यते। या सातु राजसी शक्तिः पालिनी सैव वैष्णवी ॥ या ब्रह्मशक्तिः सत्वस्य सा सत्वा वै प्रकीर्त्तिता। एतेषु सर्वभेदेषु पृथगेकैकशो धरे ॥ सर्वासां भगवान् रुद्रः सर्वगत्वात्पतिर्भवत् ॥ यावन्त्यस्ता महाशक्त्यस्तावद्रूपाणि शंकरः ॥ कृतवांस्तास्तु भजते पतिरूपेण सर्वदेति" उमायाः परब्रह्मविद्याप्रदातृत्वं स तस्मिन्नेवाकाशे स्त्रियमाजगाम

वहुशोभमानामुमां हैमवतीमित्यादि तात्वकारोपनिषद्वा-क्ये "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणै-र्निगूढामिति" श्वेताश्वतरोपनिषन्मन्त्रे च प्रसिद्धं शिवोपा-सनायां तस्याः सहोपासनानियमः "तस्मात्सहजया शक्त्या हृदि पश्यन्ति ये शिवम् ॥ तेषां शाश्वतिकी शान्तिर्नेतरेषा-मिति श्रुतिरिति," शिवपुराणे प्रतिपादित इति ॥६॥

शिवोपासनायाः साक्षान्मुक्तिहेतुमाह—

या श्रीकूर्मेण चान्त्याश्रमरतविष-
या भावनोक्ता तृतीया । दिव्यस्था-
नप्रदात्री सगुणविषयिणी शंकरा-
लम्बना सा॥ येत्वन्ये भावने ते सर-
सिजनयने ऽनादिशक्त्या चयुक्ते।
प्रापिण्यास्ते तु तस्याः क्रमिकफल-
युतैर्मौक्तिकं सांख्यमासे ॥ ७ ॥

श्रीकूर्मपुराणे इन्द्रद्युम्नं प्रति कूर्मवचनानि, "त्रिविधा भावना ब्रह्मन् प्रोच्यमाना निबोध मे। एका मद्विषया तत्र द्वि-तीया व्यक्तसंश्रया॥ अन्त्या च सगुणा ब्राह्मी विज्ञेया त्रिगुणा-त्मिका। असामन्यतमां वाऽथ भावनां भावयेद् बुधः । अशक्तः

संश्रयेदाद्यामित्येषा वैदिकी श्रुतिः॥ तस्मात्सर्वप्रयत्नेन तन्निष्ठस्तत्परायणः । तामाराधय विश्वेशं ततोमोक्षमवाप्स्यसीति, भावनानामन्त्याश्रमाद्यधिकारित्वं श्रीकूर्मेण देवर्षीन् प्रति-द्वितीयाध्याये उक्तम् । योगी च त्रिविधो ज्ञयोभौतिकः सांख्य एव च॥ तृतीयोऽन्त्याश्रमी प्रोक्तो योगमुत्तममाश्रितः॥ प्रथमा भावना पूर्वे सांख्ये त्वक्षरभावना॥ तृतीये चान्तिमा प्रोक्ता भावना पावनेश्वरीति, अन्त्याश्रमिणांमुक्त्यर्थं पाशुपतव्रतानुष्ठानपूर्वकं भस्मोद्धूलनत्रिपुण्डधारणरुद्राक्षधारणपञ्चाक्षरीजपादिनिष्ठाः एतत्कूर्मपुराण एव सशीलं राजानं मोक्षार्थं यतमानं प्रस्तुत्योक्तम्। "अथास्मिन्नन्तरे ऽपश्यत्समायान्तं महामुनिम् । श्वेताश्वतरनामानं महापाशुपतोत्तमम्। भस्मसन्दिग्धसर्वाङ्गं कौपीनाच्छादनान्वितम् । तपसाकर्षितात्मानं शुक्लयज्ञोपवीतिनम्॥ समाप्य संस्तवं शंभोरानन्दाश्रुविलक्षणः॥ ववन्दे शिरसा पादौ प्राञ्जलिर्वाक्यमब्रवीत्। धन्योस्म्यनुगृहीतोस्मि यन्मेसाक्षान्मुनीश्वरः ॥ योगीश्वरोऽद्यदृष्टोयं योगी योगविदाम्वरः॥ अहो मे सुमहाद्भाग्यं तपांसि कलितानि मे । किं करिष्यामि शिष्योऽहं भक्तं मां पालयानघ ॥ सोऽनुगृह्याथ राजानं सुशीलं शीलसंयुतम्॥ शिष्यत्वे परिजग्राह तपसा क्षीणकल्मषम्। सांन्यासिकं विधिं कृत्स्नं कारयित्वा विचक्षणः।ददौ तदैश्वरं ज्ञानं स्वशाखोक्तं हितप्रदम् ॥ अशेषवेदसारं तत्पशुपाशविमोक्षणम् ॥ अन्त्याश्रममिति ख्यातं ब्रह्मादिभिरनुष्ठितम्॥ उवाच शिष्यान् संप्रेक्ष्य एतदाश्रमवासिनः॥ ब्राह्मणान्

क्षत्रियान्वैश्यान्ब्रह्मचर्यपरायणान्॥ मया प्रदर्शितं सांख्यमधी-
त्यैवेह योगिनः॥ समासन्ते महादेवं व्योमवन्निष्कलं शिवम्॥
इह देवो महादेवोरममाणः सहोमया। अध्यास्ते भगवानास्मिन्
भक्तानामनुकम्पया। इहाशेषजगद्धाता पुरा नारायणः स्वयम्।
आराधयन्महादेवं लोकानां हितकाम्ययेत्यादिना श्वेताश्वत-
राणां मन्त्रोपनिषदि पाशुपतनिरूपणं मुक्त्यर्थं च योगनिरू-
पणं च कृतम्। सात्वत्र मया दर्शिता नित्यमेवोक्ता तत्र ह्याख्या-
यते तपः प्रभावाद्देवप्रसादाच्च ब्रह्मन् श्वेताश्वतरो ऽयं विद्वान्
अन्त्याश्रमिणः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टमिति
सांख्ये त्वक्षरभावनेति द्वितीयाऽव्यक्तसंश्रयेति चाक्षराव्यक्त-
शब्दाभ्यां परब्रह्मणः शिवस्य चिच्छक्तिरुक्ता "जगदेतदनाद्य
न्तं ब्रह्मण्येव व्यवस्थितम् ॥ तदात्मकं तदाऽव्यक्तं तदक्षर-
मिति श्रुतिरिति' कौर्मेऽत्र तस्यामव्यक्ताक्षरव्यवहारदर्शनात्
इयमेव च तृतीया सगुणभावना साक्षात्पारमेश्वरी हि प्रस्था-
नप्रदा परममुक्त्युपायभूता च। आद्या तु भावना तद्द्वारा, अत
एव चिरं नारायणमेवोपासितवत इन्द्रद्युम्नस्य द्वितीय-
भावनाप्राप्तिपूर्वकं तृतीयभावनया निरस्तनिखिलद्वैतजीवा-
भिन्ननिर्गुणब्रह्मज्ञानसाधनोत्तमलोकप्राप्तिस्तस्यपारमेश्वरदि-
व्यस्थानप्राप्तिश्चोक्ता. "संप्राप्य भावनामन्त्यां ब्राह्मीमक्षर-
पूर्विकाम् ॥ अवाप परमं योगं येनैकं परिपश्यति ॥ यं वि-
निद्रा जितश्वासाः काङ्क्षन्ते मोक्षकाङ्क्षिण" इति॥ "आनन्द-
मचलं ब्रह्मस्थानं तत्पारमेश्वरम्। सर्वभूतात्मभूतस्थः परमैश्वर्य-

४

मास्थितः॥ प्राप्तवानात्मनोधाम यन्मोक्षाख्यमव्ययम्॥ तस्मात्सर्वप्रयत्नेन वर्णाश्रमविधौ स्थितः ॥ समाश्रित्यान्तिमं भावं नरोऽलक्ष्मीं तरेद् ध्रुवमितिच ॥ प्राप्य स्थानं यदपेक्षयोत्तमं नास्तीति च तत्रैव द्वितीयाध्याये दर्शितं, प्राजापत्ये ब्राह्मणानां स्मृतं स्थानंक्रियावताम्। स्थानमैन्द्रं क्षत्रियाणां संग्रामे मृत्युलाभिनाम् । वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तताम्॥ अष्टाशीतिसहस्राणामृषीणामूर्ध्वरेतसाम् ॥ हैरण्यगर्भं तत्स्थानं यस्मान्नावर्त्तते पुनः। योगिनां चामृतं स्थानं व्योमाख्यं परमक्षरम् ॥ आनन्दमैश्वरं धाम सा काष्ठा सा परा गतिरिति॥ एवं परमाकाशरूपपारमेश्वरदिव्यस्थानप्रापिण्याः स्तृतीयभावनायाः निर्गुणयोगसंपादनद्वारेण परममुक्तिहेतुत्वं पुराणावसरेऽपि स्पष्टीकृतम् । मया प्रोक्तोहि भवतां योगः प्रागेव निर्गुणः॥ आरुरुक्षस्तु सगुणं पूजयेत्परमेश्वरम्॥ पिनाकिनं त्रिनयनं जटिनं कृत्तिवाससम् ॥ पद्मासनस्थं रुक्माभं चिन्तयेद्वैदिकीश्रुतिः॥ एषयोगः समुद्दिष्टः सवीजोमुनिपुङ्गव, इत्यारभ्य, यथाविधि प्रकुर्वाणः प्राप्नुयादीश्वरं पदमित्यन्तेन, अत्र तृतीया भावना विवक्षितेत्येतदादिष्वमूर्ताह? अत्रापि कथितो योगो विवक्षित इत्येतदाद्यभावनावीजश्च सवीजकः, ज्ञानं तदुक्तं निर्वीजं पूर्वं हि भवतां मयेत्याद्यभावनयोरपि सगुणनिर्गुणविषयत्वेन द्वैविध्यमुक्त्वा, सगुणयोस्तयोर्विष्णुं रुद्रं विरञ्चिं वा सवीजं भावयेद्बुधः ॥ अथवाऽन्यान्दिकान्देवान् तत्परः संयतेन्द्रिय, इति कांश्चन विषया-

नापाततः प्रदर्श्य, पूजयेत्पुरुषं विष्णुं चतुर्मूर्तिपरं हरिम्। अनादिनिधनं देवं वासुदेवं सनातनम्॥ नारायणं जगद्योनिमाकाशं परमं पदम्॥ तल्लिङ्गधारी नियतस्तद्भक्तस्तत्परायणः॥ एष एव विधिर्ब्राह्मी भावना चेति मे मतिरिति। अत्र बाह्यपूजायां इव आद्यभावनाद्वयस्यापि विषयोक्त्या पूजयेत्पुरुषं विष्णुमित्यादौ चतुर्भुजत्वादिविशिष्टं विष्णुरूपं तन्मूलं परमाकाशरूपं च विवक्षितमित्यवसीयते तदनुसारेण आकाशं परमं पदमित्येतद्द्वितीयभावनाविषयसमर्पकत्वेन प्रत्येकं योजनीयम्। तल्लिङ्गधारीत्यत्र तल्लिङ्गं द्वितीयाध्याये दर्शितम्। आश्रमोवैष्णवो ब्राह्मो हराश्रम इति त्रयः॥ तल्लिङ्गधारी नियतस्तद्भक्तजनवत्सलः॥ ध्याये त्समर्चयेदेतान् ब्रह्मविद्यापरायणः॥ सर्वेषामेव भक्तानां शंभोर्लिङ्गमनुत्तमम्॥ सितेन भस्मना कार्यं ललाटे वक्रपुंड्रकम्। यस्तु नारायणं देवं प्रसन्नः परमं पदम्। धारयेत्ससर्वदा शूलं ललाटे गन्धवारिभिः॥ प्रसन्नोयज्जगद्बीजं ब्रह्माणं परमेश्वरम्। तेषां ललाटे तिलकं धारणीयं तु सर्वदेति ॥७॥

आदि शक्त्युपासनायाः नारायणोपासनाया इव विग्रहविषयत्वं तल्लोकप्राप्तिद्वारकत्वापेक्षाया परिशेषाच्छिवधर्मोत्तरादिप्रसिद्धमुमाविग्रहविषयत्वं तल्लोकावाप्तिद्वारकत्वं च दर्शयति—

विद्वांसः शंकरस्य श्रुतिमतिमहि-

# तदुपासनावासनाभि, र्लब्धस्वान्त-प्रतिष्ठाःसुदृढमभिदपातं विलोक्या-त्मनैव ॥ गोलोकस्योर्ध्वभागादपि परमपदाद्वैष्णवादूर्ध्वदेशे, भास्व-त्कोटिप्रभं यान्त्यपुनरपगमस्थान-मानन्दरूपम् ॥८॥

श्रवणमननद्वैविध्यमङ्गीकारादनियमाशङ्कायां लौकिकप्रमाणेनैव तयोर्नियमतः प्राप्तिमभिप्रेत्य श्रुतिमतिमहितेति विशेषितं श्रवणमननोपासनानामभेदविषयत्वाद्वासनादार्ढ्येन तत्फलस्य साक्षात्कारस्यापि "अभेद विषयं जगत्॥अद्वैतं भावयात्मानं द्रक्ष्यसे परमेश्वरमिति" गोलोकस्योपरिभागे वैष्णवं परमंपदमित्यत्र श्रुतिः ते ते धामान्युश्मसी गमध्यै गावो यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेवेति॥ अस्या अर्थः ॥ हेविष्णो ते तानि तच्छब्दाद्बहुवचनस्य सुपांसुलुगिति सूत्रेण शेइत्ययमादेशः ते तानि धामानि स्थानानि गमध्यै गन्तुं उश्मसी इच्छामः गमध्यै इति गमेर्धातोस्तुमर्थेसेसेनित्यादि सूत्रेण तुमुन् प्रत्ययार्थे अध्यै प्रत्ययः उश्मसी वशकान्ताविति धातोरुत्तमपुरुषबहुवचने इदेतोमसीति सूत्रेणान्तिमइकारागमः सां-

हितोदीर्घः तान्येव धामानि विशेष्यन्ते यत्र येषु स्थानेषु अपासः अनपायिन्यः पातेरसुन्प्रत्ययेन समासः भूरिशृङ्गाः दीर्घशृङ्गाः गावः नन्दादयोगोमातरः सन्ति अत्राह एतेष्वेव स्थानेषु अहेतिनिपातएवकारार्थः तत् प्रसिद्धं उरुगायस्य उरुभिर्महाद्भिर्गीयमानस्य भूरेर्महतोविष्णोस्तव परमं अधस्तनविष्णुलोकापेक्षयोत्कृष्टं पदमवभाति परमशिवलोकस्याधस्ताद्भाति इति न ब्रह्मणः सदनात्तस्य परमं स्थानं प्रकाशत इति ब्रह्मलोकात्परत्वेन श्रुतस्य विष्णुलोकस्य कथं गोलोकान्तर्गतत्वमिति शङ्कनीयं गोलोकस्यापि ब्रह्मलोकात्परत्वात् अतएवानुशासनिके कथं गोलोकस्य ब्रह्मलोकादपि परत्वमिति पृष्टवन्तं युधिष्ठिरं प्रति तत्रकारणं ब्रह्मवरदानं भीष्मेणोक्तम्। येऽर्चयन्ति त्वद्भवा गाः गोलोके यान्तु ते नराः ॥ मल्लोकोपरि वत्स्यन्ति भवत्या रोहिणि प्रजा इति ॥ मल्लोकोपरि तेलोको भविता सुर मे सदा। त्वत्सुतास्त्रिजगद्भूत्यै गावो भूम्यां चरन्त्विहेति, हरिवंशे गोवर्द्धनोद्धरणे गाः सरक्षितवन्तं कृष्णं प्रति शक्रवचनैरपि ब्रह्मलोकादुपरिगोलोकस्तस्योपरिवैष्णवं परमं पदमिति प्रतिपादितम्। स्वर्गादूर्ध्वं ब्रह्मलोको महर्षिगणसेवितः। तस्योपरि गवांलोकः साध्यास्तं पालयन्ति हि॥ त्वं हि सर्वगतः कृष्ण महाराशिगतो महान्॥ उपर्युपरि तत्रापि गतिस्तव तपोमयी॥ यां न विद्मो वयं सर्वे पृच्छन्तोऽपि पितामहम्॥ यां योगनिरता विप्रा भजन्ते ब्रह्मवादिन इति ॥ साध्याः, यत्र पूर्वेसाध्याः सन्तिदेवा इति पुरुषसूक्तोक्ता देवाः उपर्युपरि गवां स-

मीपएव उपरिभागे शिवधर्मोक्तशास्त्रे पञ्चमाध्याये ब्रह्मलोकात्परं विष्णुलोकं प्रकृत्य, ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपुरं महत्। भोगसंस्थानमतुलं कर्मयोगरतात्मनाम् ॥ अप्रमेयगुणैर्दिव्यैर्विमानैः सर्वकामिकैः ॥ असंख्यैस्तत्परं व्याप्तं सर्वप्राण्युपकारकैः॥ सहस्रभूमिविस्तीर्णैः सूर्यकोटिसमप्रभैः। रुद्रलोक इति प्रोक्तमशेषगुणसंयुतम् । सर्वेषां शिवभक्तानां तत्परं परिकीर्त्तितम्॥ रुद्रक्षेत्रमृतानां च जङ्गमस्थावरात्मना, मित्यादिवचनैरुपरि शिवलोकं वर्णयित्वा, इत्येतदपरं प्रोक्तं श्रीमच्छिवपुरं महत्॥ देहिनां कर्मनिष्ठानां पुनरावर्त्तनंमतामिति तत्प्रसङ्गं-समाप्य, ऊर्ध्वं शिवपुराज्ज्ञेयं स्थानत्रयमनुत्तमम्॥ नित्यं परमशुद्धं च स्कंदोमाशंकरात्मकमित्युक्त्वा पुनर्द्वादशाध्याये विष्णुलोकाच्च परमं श्रीमच्छिवपुरं वर्णयित्वा तत्र सर्वतोभद्रमणिमण्डपे शिवस्योपस्थानमुक्त्वा, ईश्वरायतनस्याग्रे श्रीमान् धर्मवृषः स्थितः ॥ यत्र वीरवृषस्तत्रः नित्यं गोमातरः स्थिताः॥ गोलोकः शिवलोकश्च एकएव ततः स्मृतः॥ ये गुणा रुद्रलोकस्य गोलोकस्यापि ते गुणाः ॥ इत्यपराशिवपुराणान्तर्गतं गोलोकमभिधाय, शिवलोकाद्बहिर्ज्ञेयमण्डस्यावरणाष्टकम् ॥ अण्डादूर्ध्वं पुनर्ज्ञेयं प्रकृतेर्मध्यतः स्थितम्॥ ब्रह्मणः परमं स्थानं पद्मरागसमप्रभम् ॥ ब्रह्मलोकात्परं ज्ञेयं विष्णोः स्थानं सनातनम्॥ इन्द्रनीलप्रतीकाशं महाभोगैरलंकृतम् ॥ विष्णुलोकात्परं स्थानं कुमारस्य महात्मनः॥ स्वच्छमौक्तिकसंकाशं वरभोगसमन्वितम् ॥ स्कंदस्थानात्परं स्थानमुमादेव्याः प्रकीर्त्तितम् ।

तप्तचामीकरप्रख्यमशेषिगुणसंयुतम् ॥ उमास्थानाच्च परतः स्थानमाद्यमुमापतेः॥ दिनकृत्कोटिसंकाशं सर्वकामसमन्वितमिति ब्रह्माण्डादूर्ध्वं स्कंदोमाशंकरलोकब्रह्मविष्णुलोकावप्युक्तौ।स्कान्दे तु काशीखण्डे उमालोकात्परोपि गोलोको दर्शितः। शिवलोकाच्च गोलोकादुमालोकाच्च सर्वतः ॥ कुमारलोकाद्वैकुण्ठात्सप्तलोकात्समं ततः ॥ तपोजनमहश्च सर्वे स्वर्लोकवासिनः ॥ भुवर्लोकाच्च भूलोकान्नागलोकात्तथाऽखिलान् ॥ स्नातुं माघे समायान्ति प्रयागमरुणोदय इति, अयमेव गोलोकोऽत्र विवक्षितः, इत्थं श्रीकण्ठशिवाचार्यविरचितब्रह्ममीमांसाभाष्याभिमतरहस्यार्थजातं संक्षिप्तम्। अत्र मूलानि भाष्यवचनान्युदाहरिष्यामः तत्र ब्रह्मज्ञानरूपायाः शक्तेः सकलधर्मगुणरूपत्वं सर्वत्र प्रसिद्धोपदेशादित्यधिकरणे दर्शितम्। सकलचिदचित्प्रपञ्चमहाविभूतिरूपा महासच्चिदानन्दसत्तादेशकालादिपरिच्छेदशून्या स्वभाविकी परा शक्तिः परब्रह्मणः शिवस्य स्वरूपं गुणगणश्च भवति न व्यतिरेकेण ब्रह्मणः सर्वज्ञत्वसर्वशक्तिमत्वसर्वकारणत्वसर्वनियन्तृत्वसर्वोपास्यत्वसर्वानुग्राहकत्वसर्वपुरुषार्थहेतुत्वादिकं सर्वगतत्वं च न सम्भवति किंच महेश्वरत्वं शिवमहादेवरुद्रादिपरमाख्याभिधेयत्वं च न संभवतीति तस्याः सकलजगदाधारपरमाकाशरूपत्वं जन्मादिसूत्रे आकाशशरीरं ब्रह्मेति श्रुतिव्याख्यायां दर्शितम् । आकाशत इत्याकाशः प्रकाशश्चिदंबरमुच्यते, न भूताकाशः विशेषाभावात् निखिलजगदण्डखण्डबुद्बुदकदम्ब

जलधिस्थानीया परमप्रकृतिरूपा परमशक्तिर्हि चिदंबरमुच्यते तत्स्वरूपं ब्रह्म आकाशशरीरं परमप्रकृतित्वं चिदाकाशस्य सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह वै नामरूपयोर्निर्वहिताते यदन्तरेत्यादिश्रुतिसिद्धामितिदहराधिकरणेऽपि अथ यमात्मा स सेतुरेषां लोकानामसंभेदायेतिश्रुतजगदाधारभावदहराकाशरूपत्वमस्याः प्रदर्शितं न दहराकाशमध्यवर्त्तिपरमेश्वर उपास्यः किन्तु दहराकाशे परमेश्वरधर्माणामपहतपाप्मत्वादीनां संबन्धप्रतीतेर्दहराकाशमध्यस्य चिदंबररूपतयेति न विरोध इति तस्याः परब्रह्मपरमानन्दरूपत्वमानन्दमयाधिकरणे दर्शितं परमाकाशरूपं प्रकृत्य आत्मा आनन्दमय इति श्रूयते ? नांविश्वाधिकां निमित्तं परंब्रह्म यत्सत्यं ज्ञानमनन्तं ब्रह्मेत्युच्यते तस्माद्वारा तस्मादात्मन आकाशः संभूत इत्याकाशादिप्रपञ्चप्रकृतित्वेन श्रुत आनन्दमयः परमाकाशः परमाकाशरूपत्वमस्य यदेष आकाश आनन्दो न स्यादित्यतोऽवगम्यते। पुनरेष एवानन्दो ब्रह्मेति व्यजानादानन्दाद्ध्येव खल्विमानि भूतानि जायन्ते इत्यादिना सकलभूतप्रकृतित्वेनाभिधीयते तत्रानन्दोब्रह्मेत्यानन्दस्य ब्रह्मत्वे व्यपदेशस्तु ब्रह्मधर्मत्वेन तदभेदात सैषा भार्गवी विद्या परमेव्योमन्प्रतिष्ठितेति ब्रह्मधर्मस्वरूपे परमानन्दरूपे प्रपञ्चप्रकृतौ परमशक्तिपर्यायिचिदात्मनि वारुणी विद्या च समाप्तेत्युच्यते ततो ब्रह्मधर्मस्वभावः प्रकृत्यात्मा-

परमाकाशरूपा परमशक्तिरानन्दमय इत्युच्यते तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परंब्रह्मेति इदमेव मतमाचार्याणामभिमतम् नत्वानन्दमयं परं ब्रह्मेति मतमिति शिवादित्यमणिदीपिकायां च निपुणतरमुपपादितमस्माभिः॥ जगत्सत्तास्फूर्त्योर्ब्रह्मचिच्छक्त्यंशरूपत्वमारम्भणाधिकरणे व्यतिरेकमुखेन दर्शितम्। सच्चिद्रूपेण शिवेन यदि न व्याप्तं जगत्तदा सत्तास्फूर्तिभ्यां चिताकृतं कथमस्मिंस्फुरतीति च दृश्यते अतो मृद्घटादिकमिव कारणेन शिवेन कार्यमिदं व्याप्तमित्यत्र यद्यपि धर्मिणः शिवस्यैव जगत्सत्ता स्फूर्तिरूपत्वमुक्तामिति भाति तथापि धर्मद्वारकमेव तस्य तत्तद्विवक्षितमिति नेतव्यं मृद्घटादिकमिवेति परिणामिदृष्टान्तानुगुण्यात् तदव्यक्तमाह हीतिसूत्रभाष्ये प्रत्यक्षादिना सिद्धा सत्ता ब्रह्मेत्युक्तत्वाच्च तस्याः सकलजगदानन्दरूपत्वं अभावं वादरिरित्यधिकरणे परप्रकृतिरूपा परमसत्ता प्रकाशानन्दसमरसा परमशक्तिर्हि परब्रह्मणः स्वरूपभूतपरमाकाशमुच्यते इति तां प्रकृत्य प्रदर्शितं कोह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यादेवं ह्येवानन्दयति रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवतीति सर्वानुभवविषयत्वमस्य श्रूयते तथा च स एको मानुष आनन्द इत्यारभ्य सएको ब्रह्मणा आनन्द इति ब्रह्मपर्यन्तमुपाधिनिरोधनादानन्दाविर्भावस्तारतम्येन श्रूयते इति तथा आकाशोपास्तेश्चिच्छक्तिविषयत्वमाकाशस्तल्लिङ्गादित्यधिकरणे अक्का-

शपदेन भूताकाशइति पूर्वपक्षनिराकरणं कृत्वा भूतग्रहणप्रयो-जनप्रश्नोत्तराभ्यामाविष्कृतम् । भूताकाश इत्युपपदग्रहणेन किमिति चेत् परमाकाशस्य परमप्रकृतिरूपस्य सर्वभूतका-रणत्वसम्भवात्प्रयोजनं तर्हि परमेश्वर इति कथं निर्णयः तदभेदादिति सिद्धमिति जन्मादिसूत्रे एतदधिकरणविषय वाक्यस्यार्थो ऽर्थान्तरत्वादित्यधिकरणविषयवाक्यस्य चि-च्छक्तिविषयत्वेन लिखितत्वादयमर्थः स्पष्टः ॥ एवं सर्वत्र ब्रह्मलिंगब्रह्मवान्निर्देशाकाशपदयुक्तवाक्यानां विविक्तविष-षयत्वोक्त्या गायत्री वा इदं सर्वं भूतमित्यादिना निरूपि-तायाः गायत्र्युपासनाया अपि तद्विषयत्वं सूचितं तत्रापि हि तद्वैतद्ब्रह्मेति इदं वा तद्योयंवहिर्वापुरुषादाकाश इति प्रकृतगायत्रीपरामर्शितच्छब्दसामानाधिरणतद्विषयस्य ब्रह्म शब्दस्याकाशशब्देन सामानाधिकरण्यात् अतएव प्राण इत्यधिकरणमपि निर्णीता प्राणोपासनापि तद्विषया तत्रापि सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसम्विशन्ति प्राण-मभ्युज्जिहत इति सर्वभूतोत्पत्तिलयकारणत्वलिङ्गसद्भावेन सर्वलोकगत्याकाशाविशेषात् आकाशस्तल्लिङ्गादतएव प्राण इति सूत्रयोन्यायसाम्येन समानविषयत्वं सूचयितुं भाष्ये युगपल्लिखितत्वाच्च॥सत्यात्मप्राणा इमं मन आनन्दमिति श्रुतौ प्राणशब्दस्य प्राणः सकलाधारभूतं चिदंवरमुच्यते स्वरूपभूतायां तस्यामेवारामो यस्य तत् प्राणराममिति जन्मादिसूत्रे चिच्छक्तिपरतया व्याख्यातत्वाच्च तथा

धर्मिणः सकलजगत्सर्गरक्षासंहरणनिरोधानुग्रहरूपपञ्चकृत्य-
कारित्वं जन्मादिसूत्रे यत्सर्वज्ञत्वादिविशिष्टमस्पष्टाभिधाना-
धिकरणं शिवतत्त्वं तदेव जगत्कारणं ब्रह्मेत्युच्यते इत्या-
दि[illegible]प्रपञ्चितं चिच्छक्तेः पुरुषप्राप्त्या सकलजगदुपादानत्वं
[illegible]प्रकरणे, मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं ॥
स्यावयवभूतेन व्याप्तं सर्वमिदं जगदिति, श्रवणान्मायायाः
सकलप्रकृतित्वं (?) तद्विशिष्टत्वेन महेश्वरस्य तदवयवभूतेन चिच्छ-
क्तिशकलभूतेन भोक्तृत्त्वदशायां पुरुषसंज्ञकेन सकलजग-
द्व्याप्तिश्चावगम्यत इति मायिनः परमेश्वरात् सकलचेतनाचे-
तनः प्रकृतिपुरुषोऽभिव्यक्तो भवति तत्तद्रूपादीश्वराद्
व्यक्तचतुर्मुखाद्युत्पत्तिः तथा च श्रुतिरीश्वरस्य पुरुषरूप-
त्वमभिधत्ते पुरुषो वै रुद्र इति च प्रदर्शितं अत्र श्रुतिगतेनेति
पदमंशभूतेनेत्यनेन व्याख्यातं तदपि महेश्वरांशत्वं न साक्षात्
किन्तु तद्धर्मचिच्छक्त्यंशद्वारकमिति चिच्छक्तिशकलम-
वयवभूतेनेत्यनेन व्याख्यातं अंशेनेति वक्तव्ये शकलेनेत्युक्ति
र्विश्वोत्तरोत्तरोत्तरे विचित्रमनोरथस्य कस्यैकशक्तिशकलः
समाप्तः अध्वानमध्वायतिमध्ववीदो वदन्ति तस्मै नमः
सकललोकविलक्षणायेति शिवपुराणवचनस्य च स्वोक्तार्थ-
विषयत्वद्योतनार्थं अव्यक्ताच्चतुर्मुखाद्युत्पत्तिरिति जडाजड-
सकलप्रपञ्चोपादानत्वमुक्तं स्त्रीरूपप्राप्त्या परब्रह्म महिषीत्वं
वहुषु स्थलेषु कृतं सत्यमिति मन्त्रार्थकथने कृष्णपिङ्गलशब्द
परिगृहीततया व्याख्यायते। पुरुषस्य नारायणस्य ब्रह्मकोटित्व


CC-0. Jangamwadi Math Collection. Digitized by eGangotri

मीक्षतिकर्माधिकरणे प्रपंचाकारमन्तरेण यन्निरतिशयानन्दस्व भावं विष्णोः परमपदरूपं तदेव शिवाभिधेयं परमं ब्रह्मेति विष्णुशिवयोरुपादाननिमित्तयोरवस्थाभेदमन्तरेण स्वरूपे भेदोनास्तीति च प्रदर्शितं सर्वो वैरुद्र इति परमेश्व[illegible]र्यां त्मताभिधानमुपक्रम्य पुरुषस्य नारायणस्य हि सर्व[illegible] मुपादानत्वात् कथमस्य सर्वात्मत्वमित्याशंकायां पुरुषोवैरुद्र इति पुरुषस्य विद्महे सहस्राक्षस्य महादेवस्य धीमहीति च पुरुषो पि परमेश्वरस्यमहाविभूत्याऽऽत्माजगदाकार इति निरूपित मिति उमायाः परब्रह्मकोटित्वं तत्रैवाधिकरणे कृतं सत्यामिति मन्त्रार्थविवरणे परशक्त्या प्रणववर्णव्यत्यासरूपणाशब्दवा- च्यायाः शवलाकारत्वेन कृष्णपिङ्गलमित्यनेन दर्शितं अत्र हि परब्रह्मत्वलिङ्गं प्रणववाच्यत्वमुमाया अप्यस्ति तत्र प्रणव मात्राणामुकारस्ततो मकारस्तदनंतरमकार इति व्यत्यस्ताव स्थानमात्रं दर्शितं अयमर्थो लिङ्गपुराणे शिवेनाम्बिकायै वर्णितः "त्वदीयः प्रणवः कश्चिन्मदीयः प्रणवस्तथा ।। त्वदीयो देवि मन्त्राणां शक्तिभूतो न संशयः ।। अकारोकारमकारामदीये प्रणवे स्थिताः।।उकारं च मकारं च अकारं च क्रमेण तु।।त्वदीयं विद्धि त्रिमात्रंप्लुतमुत्तममिति वचनवलादकारस्य प्लुतभावः तस्माद्दोंवीजमुमाशक्तिरित्यादौ प्लुतोच्चारणंकार्यंलोकेतुस्त्री त्वाविवक्षायां गुणपरिणामादितिसूत्रेभाष्ये निर्विकारस्य परि णामासम्भवशङ्कायां यथानिमित्तस्य प्रकृतित्वेपि च विकारा दिस्पर्शस्तथा परिणामः सम्भवतीतितत्परिहारं प्रतिज्ञाय

कोयमपूर्वः परिणामः कुतूहलिनो वयं तच्छ्रवणे विचिन्वता मिति पुनः शङ्कामुद्भाव्य शृणु विवेचयाम इत्यादिना साक्षान्नि र्विकारस्य पुरुषावस्थाद्वारकः परिणामइत्युपपादनेन दर्शितं त[illegible]प्रतिषेधादित्यधिकरणेप्युक्तं सर्वज्ञात्सर्वशक्तिमतः [illegible]द्वाराधिकात्प्रथमं परमप्रकृतिः पराशक्तिः प्रादुर्भवति तथात्मन एवसप्रथमं भोक्तृत्वदशायां पुरुषइत्युच्यते सहस्रशीर्षापुरुषः इति श्रुतौ श्रूयते तदात्मन एव शिवात्स-कलचेतनाचेतनप्रपंचपरिणाम इति जीवानां स्वरूपेण न तद्विकारत्वं किन्तु धर्मज्ञानासंकोचनविकासादिविशिष्टतया, स्वरूपतस्तु केवलंतदंशा इत्येतदंशोनानाव्यपदेशादित्यधि-करणे भाष्ये दर्शितं प्रपंचितं नारायणस्य शिवपदप्राप्तिसाधन त्वं पञ्चरात्राधिकरणे पांचरात्राप्रासप्रामाण्यसमर्थनानन्तरं शङ्कोत्तराभ्यां दर्शितं ननु पुरुषो वै नारायण इत्यादिश्रुत्या परमे-श्वरएव पुरुषोवासय यदेवस्तज्ज्ञानाराधनादिकमपि क्रमेण परमेश्वरप्राप्तिसाधनमिति श्रूयते तदाराधनप्रतिपादकस्य पांचरात्रस्याप्रामाण्ये तस्यानाराध्यत्वप्रसंग इति चेत् श्रुति विरोधात्पांचरात्रस्याप्रामाण्येपि तस्य का हानिः श्रुतिप्रसिद्ध-मार्गेण तदाराधनसम्भवादिति देवदेवैर्जुष्टत्वमाद्यस्थान स्येतिहि साक्षाद् विषय इत्यादि पुराणवचनोदाहरणेन सूचितं तस्य परब्रह्मशक्तिरूपपरमानन्दमूर्तित्वं विशेषं च दर्शयति सूत्रभाष्ये विष्णोः प्रपञ्चावस्थितस्य परममुत्कृष्टं पदं स्वरूपं परमाकाशरूपं परमानन्दलक्षणं शिवस्य परब्रह्मणः परम्पद-

मेव यत्रासौ निर्हिनात्मा प्रपञ्चाकारोपि न संसरतीति वैष्णवाय परशक्तिविशेषाणां पुंसां सभेदत्वमप्रतीकाशङ्कालंबनापि-सूत्रभाष्ये सर्वज्ञ यथा मनोवाग्विपर्यासहितं स्वशक्तिमरीचिभिः सकलजगत्पूरकं स्वाविभक्तया परप्रकृतिरूपया पर[illegible] चिदेकरूपपरमाकाशलक्षणया स्वावस्था[illegible] यणारब्धहिरण्यगर्भादिसकलकार्यप्रपञ्चया परां[illegible]योम या शबलितरूपं निर्विकारं त्रिलोचनं परं ब्रह्म सर्वोत्तरमिति अत्रस्वशक्तिमरीचयः स्वशक्तेः परमाकाशरूपायाः मरीचयः स्तदंशभूताः वैष्णवादिशक्तिविशेषा विवक्षिताः सर्वत्रप्रसि-द्धोपदेशादित्यधिकरणे शिवस्य सर्वानुग्राहकत्वादिधर्माणां शक्त्यधीनत्वप्रतिपादनात् तस्याः श्रुतिसिद्धं परब्रह्मविद्या प्रदातृत्वं सूचितं वहुप्रदेषु उमासहायं परमेश्वरंप्रभुं त्रिलोचनं नीलकण्ठंप्रशातं, ध्यात्वा मुनिर्गच्छतिभूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ऋतं सत्यं परब्रह्म पुरुषं कृष्णपिंगलं॥अंविका पतय उमापतये नमोनमः, इति कैवल्यवाक्यानामुदाहरणा-त्तस्याः शिवेन सहोपासनादिनियमः सूचितः शिवोपासनायाः साक्षाद्दिव्यस्थानप्रदातृत्वं प्रथमसूत्रमारभ्य तत्र तत्र प्रदेशेषु वहुधा प्रदर्शितं तस्याः साक्षात्कारद्वारकत्वं विकल्पोऽवि-शिष्टफलत्वात् आप्रापणात्तत्रापि हि दृष्टमित्यधिकरणयोरुक्तं उपासनासाक्षात्कारयोः शिवजीवाभेदविषयत्वं आत्मेति तूपगच्छन्ति ग्राहयंति चेत्यधिकरणे वर्णितं उमानारायणयोः परंपरया दिव्यस्थानप्राप्तिहेतुत्वं प्रतीकालंवनादिसूत्रभाष्ये

दर्शितं "तेब्रह्मलोकेतु परान्तकालेपरामृतात्परिमुच्यन्तिसर्वे" इति श्रुतेः [illegible] शिवस्य परमविभूतित्वेन ये विष्णुमुपासते तदन्तस्थानत्वात् ब्रह्मशब्दवाच्यस्य तस्य लोकं प्राप्य प्रा[illegible]तयः परान्तकाले परंपरा चर्मदेहावसानेपरा[illegible]भवतीति विष्णूपासकानामर्चिरादीनां विष्णुपदप्राप्तिपू[illegible]मविलम्बेन शिवपदप्राप्तिरिति नारायणोपासनायामुक्तमिदं अम्बिकोपासनायामपि तुल्यम् न्यायसाम्यात्॥ कन्यारूपामुमां शान्तां सूर्यकोटिसमप्रभां, ध्यायमानः सदा भक्त्या दिव्यं स्थानमवाप्नुयादिति शिवधर्मोत्तरे तदुपासनायास्तल्लोकप्राप्तिहेतुत्वस्योक्तत्वाच्च तत्तल्लोकप्राप्तिद्वारकत्वोक्तिः शिवोपासनाद्वारकत्वस्याप्युपलक्षणं, यदाचर्मवदाकाशं वेष्टयिष्यन्तिमानवाः॥तदाशिवमविज्ञाय दुःखस्यान्तोभविष्यतीति मन्त्रस्य भाष्ये बहुषु प्रदेशेषूदाहृतत्वात् दिव्यस्थानस्य विष्णुलोकात्परत्वं सांप्रदायाधिकरणे प्रदर्शितं विष्णुपदसम्बधिनि विरजा नदी प्राकृतप्रपञ्चसीमावधिः तदनुप्रवेशेन प्रसीदप्रक्षीणसर्वकर्मलेपाः योगिनोविष्णुपदादूर्ध्वंप्रमाकृतं शिवपदं परमानन्दमयमनुभवंतस्तत्प्रविशतीति अन्यविष्णुलोके गोलोकान्तर्गतएव विवक्षितः न परशिवलोकान्तर्गतः पराशिकलोकं प्राप्तानां पुनः संसरणाभावस्त्वनावृत्तिः शब्दादित्यधिकरणे, दिनकृत्कोटिसंकाशं स्थानमादिमुमापतेः॥ सर्वकामसमायुक्तं विशुद्धं नित्यमक्षयं॥ सम्प्राप्य तत्पदं दिव्यं समस्तक्लेशवर्जिताः॥सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णा भवन्ति

च॥ विशुद्धकार्यकरणाः परैमर्श्वर्यसंयुताः॥ सदेहाश्च विदेहाश्च भवन्त्यात्मेच्छया पुनः ॥ ये सम्प्राप्ताः परं स्थानं ज्ञानयोगरता नराः॥ न तेषां पुनरावृत्तिर्घोरे संसारमण्डले ॥ इत्यादिवचनैर्व्यवस्थापित इति सर्वं समंजसम् ॥

आमथ्य भाष्यदुग्धाब्धिमाप्तं रत्नत्रयं
शम्भुर्गौरीहरिश्चेति तच्च सम्यक् परीक्षितम् १

इति श्रीमद्भरद्वाज कुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य्य विश्वजिद्या जि श्रीरङ्गराजाध्वरि (व) सूनोरप्पय्यदीक्षितस्य कृतौ

रत्नत्रयपरीक्षा समाप्ता ।

## विज्ञप्तिः ।

विदितमस्तु तत्रभवतां विद्वज्ज
णां सहृदयसुहृज्जनानाम्। यदियं रत्न..
रावारपारगैः सकलशास्त्रक्षीराब्धिमथ
रसास्वादैः श्रीमदप्पय्यदीक्षितैः कृता, तथापि न ज्ञाय.. केन निरक्षरपुरु..ण व
पश्यतोहरेणोद्विग्नमनसा क्षिप्रं लेखनेन दुरुद्धरा दुर्वचा संपादिता, यथा मक
रस्थाने ककारः ककारस्थाने दकारस्तथा भकारस्थाने दकारः, ह्रस्ववर्णे दीर्घवर्ण
दीर्घवर्णे ह्रस्ववर्णः, एवं ष्णह्मद्रभ्रादिसंयुक्तवर्णेषु लेखकस्य परिचय एव नासी
कुत्रापि पङ्क्तिमध्ये रामरामरामेति लिखितमास्ति, किंच मूलग्रन्थतिलक
ग्रन्थयोर्विभागोपि दुरवगम्यः, श्लोकानांच छन्दोभङ्गोवर्तते, मुद्रणागारचै
चासौ प्रकाशकेन दत्ता—

अनन्यगतिना मया तस्यामेव शोधने बहुतरं प्रयत्नः कृतः परंच यथायोग्य
संतोषो न समासादितः, वर्तत एव यत्र कुत्रापि छिद्रम्। क्षमापयति त
भवद्भ्यो महद्भ्यः—

शोधकः ।



